# संस्कृत-वार्ता:

**दिनाङ्क: - 26-12-2020**

**प्रात: - 06 : 55**

**मुख्यवार्ता:**

- प्रधानमन्त्री नरेन्द्र-मोदी अद्य मध्याह्ने द्वादश-वादने दृश्य-श्रव्य-संवाद-तन्त्र-माध्यमेन जम्मू-कश्मीर-वासिभ्य: आयुष्मान्-भारत-प्रधानमन्त्री-जनारोग्ययोजना-सेहत-इत्यख्याया: स्वास्थ्य-सुरक्षा-योजनाया: शुभारम्भं विधास्यति।
- प्रधानमन्त्रिणा गतवासरे प्रधानमन्त्रिकृषकसम्माननिधि-इति- योजनान्तर्गतं वित्तीयलाभस्य अपर: भाग: दृश्यश्रव्यान्तर्जालमाध्यमेन लाभार्थिभ्य: कृषकपरिवारेभ्य: आवण्टित:।
- देशे, कोविड्-ऊनविंशति-संक्रमणात् विमुक्तानां जनानां प्रतिशतता सम्प्रति प्रवर्ध्य पञ्चनवति-दशमलव-सप्त-सप्तमिता संवृत्तास्ति।
- ऑस्ट्रेलिया-देशस्य मेलबर्न-नगरे भारतॉस्ट्रेलिया-देशयोर्मध्ये द्वितीया क्रिकेट्-निकष-स्पर्धा सम्प्रति प्रवर्तते।

--------

**कोविड्-संचेतना**

प्रिया: श्रोतार:, कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यते। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य सङ्कल्पं स्वीकुर्वन्तु -

**मुखावरकं सन्धारयन्तु**

**सामाजिकदौर्यं परिपालयन्तु,**

**पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**प्रधानमन्त्री/जनारोग्ययोजना**

प्रधानमन्त्री नरेन्द्र-मोदी अद्य मध्याह्ने द्वादश-वादने दृश्य-श्रव्य-संवाद-तन्त्र-माध्यमेन जम्मू-कश्मीर-वासिभ्य: आयुष्मान्-भारत-प्रधानमन्त्री-जनारोग्ययोजना-सेहत-इत्यख्याया: स्वास्थ्य-सुरक्षा-योजनाया: शुभारम्भं विधास्यति। अत्र प्रत्येकस्य परिवारस्य कृते पञ्च-लक्ष-रूप्यकात्मिकायै नि:शुल्क-जीवन-सुरक्षा-योजनायै व्यवस्था कल्पितास्ति। अत्रावसरे गृहमन्त्री अमित-शाह: जम्मू-कश्मीरस्य उपराज्यपाल: मनोज-सिन्हा च उपस्थितौ भविष्यत:।

**अमित-शाह:/गुवाहाटी**

केन्द्रीय: गृहमन्त्री अमित-शाह: अद्य गुवाहाट्याम् आमीनगांव-स्थले एकस्मिन् कार्यक्रमे नैकासां विकास-परियोजनानां शुभारम्भं विधास्यति। असौ गुवाहाट्याम् अपरस्य आयुर्विज्ञान-महाविद्यालयस्य स्थापना-समारोहे मुख्यातिथिर्भविष्यति। कार्यक्रमावसरे असम-मुख्यमन्त्री सर्वानन्द-सोनोवाल: तदीय-मन्त्रिमण्डलीय-सहयोगिनश्च उपस्थिता: भविष्यन्ति। गृहमन्त्रिणा जनसभैकापि संबोधयिष्यते।

**प्रधानमन्त्री/कृषक:**

प्रधानमन्त्रिणा नरेन्द्रमोदिना गतवासरे प्रधानमन्त्रिकृषकसम्माननिधि-इति- योजनान्तर्गतं वित्तीयलाभस्य अपर: भाग: दृश्यश्रव्यान्तर्जालमाध्यमेन लाभार्थिभ्य: कृषकपरिवारेभ्य: आवण्टित:। तेन अष्टदशकोटितोऽधिकराशि: प्राय: नवकोटिकृषकेभ्य: तेषु वित्तीयकोषेषु सम्प्रेषित:।

अवसरेऽस्मिन् कृषकै: 'पीएम-किसान'-इति-योजनाविषये अन्येषु विभिन्न-प्रशासकीयकल्याण-कार्यक्रमविषयेषु च स्वकीया: अुनभवा: अपि प्रधानमन्त्रिणा सह प्रस्तुता:। कृषकै: उक्तं यत् ते सर्वे प्रधानमन्त्रिकृषकसम्माननिधि-योजनात: लाभान्विता: सन्ति।

**कोविड्-19**

देशे, कोविड्-ऊनविंशति-संक्रमणात् विमुक्तानां जनानां प्रतिशतता सम्प्रति प्रवर्ध्य पञ्चनवति-दशमलव-सप्त-सप्तमिता संवृत्तास्ति। अधुनावधि प्राय: सप्तदश-सहस्राधिक-सप्तनवति-लक्षमिता: रोगिण: स्वस्थीभूता:।

**संस्कृतसाप्ताहिकी**

प्रियश्रोतार:! संस्कृतजगत्सम्बद्धै: विभिन्न-क्रियाकलापै: संवलितस्य संस्कृत-साप्ताहिकी-इति-विशिष्ट-कार्यक्रमस्य प्रसारणम् आकाशवाण्या: एफ्.एम्.गोल्ड्-प्रवाहिकात: अद्य पूर्वाह्णे विंशत्युत्तरैकादशवादने भविष्यति। अवधेयं यत् कार्यक्रमोऽयम् आकाशवाण्या: एफ्.एम्.गोल्ड-प्रवाहिकात: प्रतिशनिवासरं पूर्वाह्णे विंशत्युत्तरैकादशवादने प्रसार्यते। अस्य कार्यक्रमस्य पुन: प्रसारणं तदग्रिमे प्रति-रविवासरेऽपि तस्मिन्नेव काले श्रोतृभि: श्रोतुं शक्ष्यते।

**क्रिकेट्**

ऑस्ट्रेलिया-देशस्य मेलबर्न-नगरे भारतॉस्ट्रेलिया-देशयोर्मध्ये द्वितीया क्रिकेट्-निकष-स्पर्धा सम्प्रति प्रवर्तते। पणं विजित्य आतिथेयम् ऑस्ट्रेलिया-दलं सर्वादौ दण्डेन क्रीडितुं निर्णीतवत्। तत्रान्तरे, भारतीय-दले कानिचित् परिवर्तनानि दृश्यन्ते। तद्यथा शुभमन-गिल: कन्दुक-क्षेपक: मोहम्मद-सिराजश्च ऐदम्प्राथम्येन अत्र निकषस्पर्धामालिकायां क्रीडत:। अपरत:, रवीन्द्रजडेजा-ऋषभपन्तयो: दले पुनरागनमं जातम्।

**।। इति वार्ता: ।।**